तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

मे - २०११ रू.५/-



श्रीपद्मावती श्रीनिवासयोः परिणयमहोत्सवः, तिरुमल

१३-०५-२०११ तः १५-०५-२०११ पर्यन्तम्

(वैशाखशुक्लनवमी, दशमी, एकादश्यां च भवन्ति)



तिरुमलतिरुपतिदेवस्थानम्

# तिरुपति श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवः

११-०५-२०११ तः १९-०५-२०११ पर्यन्तम्

**११-०५-२०११ शनिवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**१२-०५-२०११ भानुवासरः**
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**१३-०५-२०११ सोमवासरः**
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

**१४-०५-२०११ मङ्गलवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

**१५-०५-२०११ बुधवासरः**
प्रातः - आन्दोलिकायां मोहिन्यवतारोत्सवः
रात्रौ - गरुडवाहनम्

**१६-०५-२०११ गुरुवासरः**
प्रातः - हनुमद्वाहनम्
सायं - वसन्तोत्सवः
रात्रौ - गजवाहनम्

**१७-०५-२०११ शुक्रवासरः**
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्

**१८-०५-२०११ शनिवासरः**
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**१९-०५-२०११ भानुवासरः**
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्

# गीतामृतम्



यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।।

यः पुरुषः शास्त्रविधिं त्यक्त्वा स्वेच्छाचरणं करोति, सः सिद्धिं, सुखं, परां गतिश्च न प्राप्नोति।

(भगवद्गीता १६/२३)

# सङ्कीर्तनम्

नमाम्यहं मानवसिंहं
प्रमदाङ्कमहोबलनरसिंहं ।।नमामि।।

दानवदैत्यविदारणसिंहं
नानायुधकरनरसिंहं
भूनभोंतरापूरितसिंहं
आननवह्निलयांतकसिंहं ।।नमामि।।

प्रलयनृसिंहं बहुमुखसिंहं
सललितगरुडाचलसिंहं
कुलिशनखरमुखघोषितसिंहं
तिलकितबहुरविदीपितसिंहं ।।नमामि।।

शान्तनृसिंहं शौर्यनृसिंहं
सन्ततकरुणाजयसिंहं
कान्तश्रीवेङ्कटगिरिसिंहं
चिंतितघनसंसिद्धिनृसिंहं ।।नमामि।।

‘नमाम्यह’ मिति शिखापदे अहोबिलनरसिंहः कीर्तितः। ‘दानवदैत्य’ इत्यादि प्रथमचरणे राक्षससंहारार्थं भुवमवतीर्णः प्रभुः भगवान् दानवान् दैत्यांश्च अवधीत्। नरसिंहेन हतेषु राक्षसेषु हिरण्यकशिपुः दैत्यः। ‘प्रलयनृसिंहम्’ इत्यादि द्वितीयचरणे नरसिंहस्य वीरत्वं वर्णितम्। वज्रायुधसदृशनखैः असुरान् प्राप्तभयांश्चाकारेति तृतीयपादेन सूच्यते।‘शान्तनृसिंहम्’ इति तृतीयचरणे प्रह्लादस्तुत्या शान्तः नृसिंहः वर्णितः। तादृशाशान्तमूर्तिः नरसिंह एव श्रीवेङ्कटाचलाधीश इति निगमनम्। अनेन आचार्यवर्येण स्वसङ्कीर्तनायां त्रिषुचरणेषु भागवतकथाक्रम एव स्वीकृत इति स्पष्टं ज्ञायते।



सम्पादकीयम्



# नम्माल्वार्

## प्रपत्तिमार्गे.....

''वृषभे तु विशाखायां कुरुकापुरकारिणम्, पाण्ड्यदेशे कलेरादौ शठारिं सैन्यपं भजेः' - एते प्रमादिनाम संवत्सरे, वृषभमासे, विशाखानक्षत्रे, शुक्लपक्षस्य चतुर्दश्यां तिथौ, शुक्रवासरे पाण्ड्यदेशे 'विष्वक्सेनस्य' अंशात् जन्मं प्राप्तवन्तः। एषां मारन्, शठारि, शटरिपुः, शठकोपिः, पराङ्कुशमुनिः, यतीन्द्रः इत्यादि उपाधयः सन्ति। एतैः रचितेषु १०० पाशुरयुतं तिरुविरुत्तं, ७ पाशरयुतं तिरुवाशिरियं, ८७ पाशुरयुतं पेरियतिरुवन्दादिं, ११०२ पाशुरयुतेषु तिरुवाय्मोलि प्रबन्धेषु ८७ पाशुरयुतं पेरियतिरुवन्दादि प्रबन्धं च तिरुमलस्वामिनः ब्रह्मोत्सवे हनुमन्तवाहन-गजवाहनसेवयोः, १०० पाशुरयुतं तिरुविरुत्तं प्रबन्धं मोहिन्यवतारे, गरुडवाहनसेवयोः पारायणं कुर्वन्ति।

एषां मातापितरौ उदयनङ्गै, कार्यौ। एतौ स्वकुमारस्य 'मारन्' (मन्मथः) इति नामकरणं कृतवन्तौ। एते जन्मं प्राप्य तस्मिन् समये एव भगवन्तं ध्यायन् समाधिस्थितिं प्राप्तवन्तः। ते जन्मप्रभृति न रोदितवन्तः। मातृदुग्धं च न पीतवन्तः। कारी दम्पती: तान् निर्जीवमिति मत्वा ग्रामे स्थित आदिनाथस्वामिदेवालये नीत्वा देवं प्राथ्य तत्र आम्लवृक्षस्य शाखायां बन्धिते डोले स्थाप्य ततः निर्गतौ। आहारपानीयानां विनाऽपि 'मारन्' दिनदिनप्रबर्धमानः अभूत्। तथा अष्टवर्षाणि अतीतानि। बालकृष्णवत् दृश्यमानं मारन्तं दृष्ट्वा भक्ताः मुग्धाः सन् भगवत्सेवायाम् अर्पितां वकुलामालां तस्य शिरसि भूषितवन्तः। अतः ते वकुलाभरणः इति नाम्ना प्रख्यातः। आदिनाथस्वामी स्वयम् एते 'अस्मदाल्वाराः' इत्युक्तवान्। तमिले 'नम्म' इत्यस्य अस्माकमित्यर्थः। 'आल्वार्' इत्युक्ते परिवारजनः इत्यर्थः। भगवतः कृपाकटाक्षे नम्माल्वार् वर्धितो जातः। ते भगवन्तमेव मातृवत् भाविताः। नम्माल्वारेण एव कारणेन भागवतधर्मरूपी प्रपत्तिमार्गः (शरणागतिः) श्रीवैष्णवसम्प्रदायतया स्थितः। नम्माल्वार् १६ वर्षेभ्यः आम्लवृक्षस्याधः एव स्थितः सन् अन्नपानादिना विना भगवद्गुणानुसन्धानं कुर्वन् निरन्तरं तपसि मग्नः आसन्। एषां सहज-ज्ञान-तपो-वैराग्य- भक्ति-प्रपत्तिभिः सन्तुष्टाः दिव्यदेशेषु स्थिताः अर्चामूर्तयः साक्षात्कारं कृतवन्तः। एते आम्लवृक्षस्याधः एव स्थित्वा विवधदिव्यदेशेषु दिव्यमङ्गलविग्रहमूर्तीनां वर्णनं तमिले मधुरकवित्वेन वर्णितवन्तः। एते एव भगवद्दर्शनानुभववर्णनानि 'तिरुवाय् मोलि' इति प्रबन्धरूपेण विराजिताः। एते ३६ तमे वर्षे अवतारसमाप्तिं कृत्वा, परमपदं प्राप्तवन्तः।

एतेषां वर्षतिरुनक्षत्रसन्दर्भे तेषां जन्मतिथितः दशदिनेभ्यः पूर्वादेव उत्सवः प्रारम्भो भूत्वा अन्तिमे दशमे दिने 'शात्तुमोर' भवति। एवं कालप्रकारेण ति.ति.देवस्थानम् अस्मिन् मासे ०१ दिनाङ्कतः १८ तम दिनाङ्कपर्यन्तं नम्माल्वार् उत्सवः आचर्यते। अन्तिमदिने 'शात्तुमोर' सेवा भवति। अस्मिन् सन्दर्भे वयं सर्वेऽपि अस्माकम् आल्वारं प्रार्थ्य भक्तिं प्रसारयामः....

'श्रीनम्माल्वार् दिव्यतिरुवडिगले शरणम्'

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-०२

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

# सप्तगिरिः

## मे - २०१९

श्रीविकारीनामसंवत्सरस्य चैत्रकृष्णद्वादशी तः वैशाखकृष्णद्वादशी पर्यन्तम् - १९४१





मुखचित्रम् – श्रीपद्मावती श्रीनिवासयोः परिणयमहोत्सवः, तिरुमल

अन्तिमरक्षापुटः – श्रीदेवी भूदेवी समेतः श्रीगोविन्दराजस्वामी, तिरुपतिः


गौरवसम्पादकः:-
श्री अनिलकुमार सिङ्घाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः – प्रधानसम्पादकः:
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः – डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः – श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

वर्णचित्रविन्यासकः - श्री पि.शिवप्रसादः, ति.ति.दे.,
विश्रान्तचित्रकारः

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.





**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते संपर्कं कुर्वन्तु -
sapthagiri helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# श्रीवेङ्कटाचले
# रामानुजाचार्याणां कार्याणि

- श्री पि.टि.जि. भरतशेखराचार्यः

श्रीभगवद्रामानुजाचार्याः भगवदाज्ञाया अवतीर्य श्रीवैष्णवसम्प्रदायस्य पुनरुद्धरणमकार्षुः। शेष एव भगवद्रामानुजानाम् अवताररूपतया आगतः इति ज्येष्ठानामभिप्रायः।

रामानुजाचार्यः अल्पे वयसि एव वेदेषु, द्रविडप्रबन्धेषु च निष्णाता अभवन्। एतेषां ब्रह्मसूत्रभाष्यं श्रीभाष्य नाम्ना सुप्रसिद्धम्। श्रीवेष्णवैराराध्यमानानां दिव्यदेशाख्यानां भगवत्क्षेत्राणां पुनरुद्धरणे आचार्याः बद्धदीक्षाः आसन्। विविध दिव्यदेशेषु शिथिलां व्यवस्थां पुनरुद्धृत्य, तत्तद् क्षेत्रेषु सम्प्रदायमनुसृत्य पूजादीनां सुदृढां व्यवस्थां पर्यकल्पयन्। तिरुमलक्षेत्रविषये एतेषाम् असाधारणश्रद्धा आसीत्। श्रीवेङ्कटाचले भगवतः कैङ्कर्येण सह आलयनिर्वहणविषये, उत्सवादीनां निर्वहणे च सुस्पष्टं विधानं पर्यकल्पयन्।

**श्रीवेङ्कटाचलक्षेत्रस्थः श्रीनिवास एव -** श्रीमद्रामानुज - यतीन्द्राणामागमनात् पूर्वं तिरुमलक्षेत्रस्य भगवान् वेङ्कटेश्वरः अस्मदीय आराध्यदेव इति शैवादयः वादमकुर्वन्। तेषां वादान् पुराणादिप्रमाणैः तिरस्कृत्य श्रीवेङ्कटनाथः महाविष्णुरेवेति निर्णयमकुर्वन्। वामनपुराणे अगस्त्याद्याः मुनयः उपरिचरवसुप्रभृतिभिः स्वामिपुष्करिणीं समाश्रित्य श्रीवेङ्कटाचलक्षेत्रस्य वैष्णवक्षेत्रत्वमधिकृत्य एवमवोचन् -

अयं किल जगद्धातुः वासुदेवस्य शार्ङ्गिणः।
भूधरो बहुवृक्षाढ्यः सदा प्रियतमो भुवि।।
एनं समाश्रिताः पुण्यं मुनयश्च पुरातनाः।
पुरातनं सुराध्यक्षं दृष्टवन्तः किलाव्ययम्।
भक्ताश्चापि जगद्धातुः स्तुवन्तः पुरुषोत्तमम्।
एनमारुह्य शैलेन्द्रं द्रक्ष्यन्ति पुरुषाः किल।।
स्थानेभ्यश्च नमस्तेभ्यः तस्येशस्य महात्मनः।
अयं गिरिः महान् दिव्यः सम्यक् प्रियतरः किल।।
नारायणाद्रिरित्येतत् नामैव वदति स्वयम्।
नारायणस्य स्थानेषु नैतस्मात् विद्यते परम्।। इति।।

तथैव वराहपुराणे धरणीवराहसंवादे -

श्रीवेङ्कटाचलो नाम वासुदेवालयो महान्।
सप्तयोजनविस्तीर्णः शैलेन्द्रो योजनोच्छ्रितः।।

इति वर्णितमस्ति। एवमाद्यैः प्रमाणैः श्रीमद्रामानुजाचार्याः श्रीवेङ्कटाचलक्षेत्रविषये विद्यमानान् विविधसंशयान् परिहृत्य श्रीवेङ्कटाचलक्षेत्रं वैष्णवक्षेत्रमेव इति न्यरूपयन्।

ब्रह्माण्डपुराणे भृगुनारदसंवादे नारदः भृगवे श्रीवेङ्कटाचलक्षेत्रस्य माहात्म्यम् इत्थं वर्णयति।

श्रुणुष्वेकमना ब्रह्मन्! मत्तः कथयतो मुने।
क्षेत्राणां क्षेत्रमुत्कृष्टं तीर्थानां तीर्थमुत्तमम्।।
श्रीवेङ्कटगिरिर्नाम क्षेत्रं पुण्यं महीतले।
सर्वपापप्रशमनं सर्वपुण्यविवर्धनम्।।
वक्तुं न तस्य माहात्म्यं ब्रह्मणापि सुरैरपि।
शक्यते वा तथा स्मर्तुं मनसापि महामुने।।
आराध्यः सर्वदेवानां माधवो भक्तवत्सलः।
विहाय स्वं परं धाम रमते रमया सह।। इति।।

एवं पुराणेषु बहुधा स्तुते अस्मिन् क्षेत्रे आगमोक्तविधानेन भगवते सर्वविधसेवाः यथाविधि भवेयुरिति

सङ्कल्प्य भगवदाज्ञया विविधव्यवस्थानां पुनरुद्धरणं, परिष्करणम्, आयोजनं वा चक्रुः।

**आलयनिर्वहणव्यवस्था -** तिरुलक्षेत्रे आचारविधानानाम - नुसरणार्थं तथा काले काले क्रियमाणाना - मुत्सवादीनां ज्ञापनार्थं काचन दृढा व्यवस्था भवेदिति मत्वा तिरुमलक्षेत्रे जीयर्मठस्य स्थापनम् आचार्याः अकुर्वन्। अत्रत्य जीयर्महाभागाः भगवद्रामानुजमुनीन्द्राणां दिव्यादेश परिरक्षका भवन्ति। अत्रत्य जीयर् व्यवस्था तिरुवेङ्कडशठगोपजीयर् व्यवस्थेति प्रसिद्धा।

श्रीरामावतारे आञ्जनेयः भगवते दोषरहितां सेवां निरवहत्। अतः आञ्जनेयः भगवत्सेवकेभ्यः मार्गदर्शकः। तस्य अनुग्रहः अत्रत्येभ्यः प्राप्यतामिति धिया तिरुमलक्षेत्रस्य बेडि आञ्जनेयदेवालयस्य पार्श्वे रामानुजयतीन्द्राः जीयर् मठस्य स्थापनमकुर्वन्। श्रीशैलपूर्णाचार्यैः प्रसादितं श्रीरामविग्रहं च अत्र मठे आराधनार्थं प्रतिष्ठापयामासुः।

प्रथमजीयर् स्वामिनः सेनापतियतीन्द्राः भगवद्रामुनुजाज्ञां यथाविधि पर्यपालयन्। ततः परमागता अपि भगवत्सेवाकैङ्कर्यपरा अभवन्।



**पञ्चसेवाचिह्नानि -** हनुमानिव भगवत्कैङ्कर्यनिर्वहणार्थं हनुमन्मुद्राङ्कितानि पञ्चवस्तूनि जीयर्वर्येभ्यः अनुगृहीतानि। तानि हनुमन्मुद्राङ्कितः भगवतः आलयद्वारस्य तालः, तालोद्घाटनाय कुञ्चिका, हनुमन्मुद्राङ्कितमङ्गुलीयकं, हनुमन्मुद्राङ्किता घण्टा, हनुमन्मुद्रयोपेतो ध्वजश्च। तदारभ्य कैङ्कर्यसमये यात्रासमये वा घण्टया, ध्वजेन च सह गन्तव्यम्। अङ्गुलीयकेन कोशागारधान्यागाराणामुपरि, तथा आलयस्य आभरणादीनां रक्षणदृष्ट्या मुद्रा स्थापनीया। तालेन भगवदाराधनान्ते द्वारबन्धनं करणीयम्, कुञ्चिकया प्रातः कालादिषु आलयद्वारमुद्घाटयेत्। विविधसन्दर्भेषु भगवतः कैङ्कर्यनिर्वहणे सहायकरूपेण चत्वारः नियुक्ताः।

**श्रीगोविन्दराजः -** चोळदेशाधिपः कुलोत्तुङ्गचोळः शैवभक्त्या सह वैष्णवविरोधेऽपि प्रसिद्धः। विविधवैष्णवदेवालयानपि ध्वस्तमकरोत्। तेषु देवालयेषु चिदम्बरक्षेत्रस्य श्रीगोविन्दराजदेवालयोऽप्यन्यतमः। कावेरीतटे विद्यमानमिदं क्षेत्रं श्रीवैष्णवाः चित्रकूटक्षेत्रमिति व्यवहरन्ति। चोलराजात् समुपस्थितं भयं परिलक्ष्य वैष्णवभक्ताः तत्रत्यदेवालयस्य उत्सवविग्रहं श्रीपदपुरीं (तिरुपतिं) समानीय आराधनामारब्धवन्तः।

श्रीचित्रकूटक्षेत्रस्य मूलमूर्तिः क्षीरसागरशयनः श्रीगोविन्दराजनाम्ना आराधितः आसीत्। श्रीकुलशेखरैः, श्रीतिरुमङ्गै आळ्वार् महाशयैश्च अयं संस्तुतः। यादवराजसाहाय्येन तिरुपतिक्षेत्रे गोविन्दराजं प्रतिष्ठापयितुं श्रीमद्रामानुजाचार्याः सङ्कल्पमकुर्वन्। तदनुसृत्य गोविन्दराजस्य विग्रहं कारयित्वा श्रीवैखानसभगच्छास्त्रमनुसृत्य प्रतिष्ठामकारयन्। श्रीगोविन्दराजस्य दक्षिणदिग्भागे गोदादेव्यै आलयं पर्यकल्पयन्। भगवद्रामानुजानामाज्ञया यादवराजः गोविन्दराजाय मिथुनमासोत्सवं, श्रीगोदादेव्यै कर्कटकमासोत्सवञ्च पर्यकल्पयत्। धनुर्मासोत्सवमपि यथासम्प्रदायं निर्वोढुं व्यवस्थामकरोत्। गोदागोविन्दराजयोः नित्यमङ्गलाशासनार्थम् आलयं परितः गृहान् निर्माय भगवत्परायणेभ्यः श्रीवैष्णवेभ्यः व्यतरत्।



# अन्नमाचार्यगुरुमहं भजे

- श्रीमती वै.एन्.एल्.बि.टि.एस्.देवी (बाला चिर्रावूरि)

वेंकटेशपदरञ्जितकृतिकर्तृकं
नन्दकाख्य हरिखड्ग मुदीरितांशम्।
पदकवित्वपितामहेति कीर्तितं
अन्नमार्यगुरुमहं भजे मुदा।।

- स्वीयम्

''एकं संगीतविज्ञानं चतुर्वर्गफलप्रदम्'' इति संगीतरत्नाकरे। सम्यग्गीयते संगीतमिति व्युत्पत्तिः। रागतालयुतं गीतं शृत्वा शिलाः अपि द्रवन्ति। भगवदनुग्रहाय संगीतं प्रधानसाधनमिति, भक्तियुक्तचेतसा सर्वेऽपि भगवन्तं कीर्तयितुं समर्थाः इति च वृद्धाः कथयन्ति। भगवति स्वचित्तं निधाय, अनुभूय च गीतान् विरच्य ये गानं कुर्वन्ति ते वाग्गेयकाराः इत्यभिधीयन्ते।

तेषु वाग्गेयकारेषु सर्वप्रथमः ताल्लपाक अन्नमाचार्यः इति कथयन्ति। सः तेलुगु-संस्कृतभाषयोः साधारणशैल्या वेङ्कटेशदेवमुद्दिश्य ''योगवैराग्यशृंगार'' विषयमवलम्ब्य च कीर्तनानि विरच्य च गानम् अकरोत्। दक्षिणापथे भजनसंप्रदायस्य, पदकविताशैल्याश्च आद्यः अन्नमाचार्यः। महावैष्णवभक्तोऽथ पूज्यः। 'पदकवितापितामहः' इति प्रख्यातिं प्राप।

अन्नमाचार्यः सर्वधारीनामसंवत्सरे वैशाखशुद्धपूर्णिमायां (मे ९,१४०८) आन्ध्रदेशे कडपा जिलायां राजपेटमण्डले ताल्लपाक ग्रामे जनिं प्राप। अतः ताल्लपाक इति तस्य उपनाम सिद्ध्यते। तस्य मातापितरौ लक्कमाम्बा, नारायणसूरिश्च। ते नन्दवरीकवंशजाः, स्मार्तवैदिकब्राह्मणाः आसन्। नन्दवरीकाः ई. २० शताब्दे काशीतः आन्ध्रदेशमागत्य अत्रैव निवसन्ति इति तेषां वंशज एव अन्नमाचार्यः इति च पूज्य अन्नमाचार्यस्य पौत्रेण ताल्लपाका चिन्नन्नेन विरचिते द्विपदकाव्ये अन्नमाचार्यजीवितांशेषु लिलेख। अन्नमाचार्यस्य पितृपितामहाः वेदवेदाङ्गपारंगताः, भक्तितत्पराः ताल्लपाक चेन्नकेशवस्वामिसेवकाश्च आसन्। अन्नमार्यस्य पिता विख्यातो कविः, पण्डितः, सकलविद्याधुरन्धर इति च प्रख्यातः। माता लक्कमाम्बा महाभक्ता, मधुरगायकी च।

नारायणसूरिः लक्कमाम्बा च अनपत्यकारणात् तिरुमल श्रीवेङ्कटेशं शरणं गत्वा तत्र ध्वजस्तम्भाग्रे साष्टाङ्गप्रणामसमये एका दिव्यकान्तिः लक्कमाम्बायाः गर्भे प्रविष्टा इति वेङ्कटेशः स्वकीयं खड्गं नन्दकांशमेव तस्याः गर्भे प्राविशदिति च गाथा वर्तते। ''अन्नं परब्रह्मेति व्यजानात्'' इति श्रुत्यनुसारेण तस्य पिता नारायणसूरिः परब्रह्मवाचकं ''अन्नमय्य'' इति नामकरणमकरोत्। शैशवादेव अन्नमाचार्यः परमभक्तः आसीत्। सः अष्टमवर्षे श्रीवेङ्कटेश्वरस्वामिनं द्रष्टुं तिरुमलक्षेत्रं प्रति यदा अगमत् तदा पद्मावतीमाता तस्मै उपानहौ विसृज्यैव तिरुमल शिखरं स्प्रष्टव्यमिति संसूच्य पायसम् अयच्छत्। तं प्रसादं स्वीकृत्य सः वेंकटेश्वरस्वामिनं ददर्श। तस्मिन्नेव वयसि ''धनविष्णु'' रिति पूज्यवैष्णवगुरुः अन्नमाचार्याय वैष्णवदीक्षां प्रसादयामास। प्राप्ते यौवने तिम्मक्का, अक्कम्मा इति द्वाभ्यां सह विवाहं कारयमासतुः तस्य पितरौ। तथापि नैरन्तर्यभक्ति-ध्यानतत्परो सः ताभ्यां सह तिरुमलवेङ्कटपतिं दृष्ट्वा अनुदिनम् एकैकं संकीर्तनं स्वामिने

श्रावयितुं संकल्प्य ३२,००० कृतीः व्यरचयत्। ताः कृतीः तस्य शिष्याः तालपत्रेषु अलिखन्। अनन्तरकाले ताः ताम्रपत्रेषु विलिख्य तिरुमलक्षेत्रे संकीर्तनाभाण्डागारे तस्य पुत्रपौत्रादयः संस्थापयामासुः। परन्तु सम्प्रति १२,००० कीर्तनान्येव उपलभ्यन्ते।

कर्णाटकसंकीर्तनाचार्यः पुरंदरदासः, अन्नमाचार्यश्च समकालीनौ। द्वावपि श्रेष्ठवैष्णवभक्तौ, संगीतकोविदौ वयसि वृद्धावपि च पूज्यपुरंदरदासः अन्नमाचार्यं सम्मिलित्वा अत्यन्तं मुमोद। पूज्यअन्नमाचार्येण विरचिताः ''संकीर्तनालक्षणम्'' ''काव्यमञ्जरी'', ''वेंकटेश्वरशतकम्'' इति ग्रन्थाः सम्प्रति उपलभ्यन्ते। अन्नमार्यः अलमेलुमङ्गाश्रीनिवाससंकीर्तनैः



कर्णाटकसंकीर्तनाचार्यः पुरंदरदासः, अन्नमाचार्यश्च समकालीनौ। द्वावपि श्रेष्ठवैष्णवभक्तौ, संगीतकोविदौ वयसि वृद्धावपि च पूज्यपुरंदरदासः अन्नमाचार्यं सम्मिलित्वा अत्यन्तं मुमोद। पूज्यअन्नमाचार्येण विरचिताः ''संकीर्तनालक्षणम्'' ''काव्यमञ्जरी'', ''वेंकटेश्वरशतकम्'' इति ग्रन्थाः सम्प्रति उपलभ्यन्ते।

स्वकीयं जिवितम् अर्पयामास। तस्य रचनासु भक्तिः, संगीतम्, साहित्यम्। श्रुंगारम्, वेदान्तश्च अत्यन्तमनोहररूपेण वर्ण्यन्ते। पूज्य अन्नमार्यः स्वीयकीर्तनेषु विष्णुतत्वेन सह लोकनीतिं, धर्मं, आध्यात्मविषयान्, जीवात्मपरमात्मनोः तादात्म्यञ्च विनिक्षिप्तवान्। पञ्चनवतिवर्षाणि परिपूर्णं जीवनं याप्य अन्नमार्यः दुन्दुभिनाम संवत्सरे फाल्गुणकृष्णद्वादश्यां (१५०३ फिब्रवरी २३) महाविष्णोर्हस्ते यथापूर्वं नन्दकरूपं प्राप। संकीर्तनद्वारा ज्ञानोपदेशकारणात् देशिक अन्नमार्यः सर्वेषां गुरुः। अतः अन्नमार्यगुरुमहं भजे मुदा।

**तेषां कृतिषु कानिचन संस्कृतनिबद्धाः -**

१. जय जय नृसिंह सर्वेश! भयहरवीरप्रह्लादवरद!!

२. त्वमेव शरणं त्वमेव शरणं कमलोदर जगन्नाथ!

३. देवदेवं भजे दिव्यप्रभावम्!

## बालगोपाल! हरे!

[ बालकृष्णनाटकम्, आदितालम् - दरुवु ]

बालगोपाल! हरे!
मां रक्ष शौरे! बालगोपाल! हरे ।।पल्लवी।।
बालगोपाल! पावनशील!
बालगोपाल हरे! ।।बालगोपाल।। ।।उपपल्लवी।।
नन्दकुमार! नगवरधीर!
सुन्दराकार! हरे! मां रक्ष शौरे! ।।बालगोपाल।।१।।
मुरळीविलोल! मोहनलील!
दुरितविफाल! हरे! मां रक्ष शौरे! ।।बालगोपाल।।२।।
तरिगोण्डाधीश! तरणिसङ्काश!
वरचिदाकाश! हरे! मां रक्ष शौरे! ।।बालगोपाल।।३।।

- तरिगोण्ड वेङ्गमाम्बा





# विजयरहस्यम्

तेलुगु मूलम् - डा।। वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादकर्त्री - श्री कल्याणचक्रवर्तिः

**श्रीमद्भगवद्गीतायां गीताचार्येण परमात्मना श्रीकृष्णेन एवं विव्रियते विजयरहस्यम्। लोके सर्वेऽपि विजयकांक्षिणः एव। तेषु प्रथमतया मुख्यतया ये विद्यार्थिनो वर्त्तन्ते, ते प्रत्यहं प्रतिक्षमं विजयप्राप्तिमेव आकाक्षान्ति, कथं भविष्यति इति आलोचयन्ति च। यथा परीक्षासु उत्तमश्रेण्यां उत्तीर्णतां कथं, तदनन्तरं उद्योगादिषु च विजयप्राप्तिः कथम् इति।**

विजयाकांक्षा सहजसिद्धिरेव। किन्तु बहुषु एकस्यैव विजयप्राप्तिर्भवति। अन्येषां न। तेषां सर्वेषां प्रति श्रीमद्भगवद्गीतायां श्रीकृष्णेन एवमुक्तं -

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि।। (२ : ६७)**

इन्द्रियाणां श्रोत्रादीनां विषयाः मनुष्यस्य प्रज्ञां विवेकशक्तिं च अपहरन्ति। यथा अम्भसि प्लवमानं नावं अतिवायुना यथा तस्य मार्गं (चरमस्थानं, गम्यमान लभ्यमानस्थानं) अप्राप्य वायुना निर्दिष्टं मार्गं प्रति चलति। तथैव मनुष्यस्य मनोऽपि एकेन इन्द्रियेण अर्थात् इन्द्रियजन्य विषयेन युक्तश्चेत् तस्य गतिरपि अन्यथा भवति; अर्थात् यत् कांक्षितं पदं तत् न प्राप्नोति मनः। तत् इन्द्रियजन्यं यत् वर्तते अपहरति मानवस्य प्रज्ञाम्। तेन न प्राप्नोति विषये बुद्धिः। अबुद्ध्या विजयप्राप्तिर्न भवति। मनोदौर्बल्येन अर्थात् इन्द्रियवशमनसा न लभ्यते विजयः अनेन।

**उदाहरणम् : -**

एका हरिणी वर्तते। तस्याः श्रवणेन्द्रियम् अति शक्तिमन्तम्। हरिणी तु संगीतप्रिया। यथा सुश्राव्यसंगीतं श्रुत्वा हरिणी तं मार्गं प्रति गत्वा बन्धी भवति। तस्याः श्रवणेन्द्रियजन्य विषयविशेषेण तस्याः जीवनं नष्टं भवति। अपि च मत्स्योऽपि रसनेन्द्रियलालसेन बन्धीभूत्वा पतति। एवमेव मनुष्यः अपि केवल एकेनैवेन्द्रियेण विजयपथं त्यक्त्वा नश्यति। केवल एकेन इन्द्रियवर्गणैव सिद्धेः नाशः यदि पञ्चेन्द्रियाणां प्रति चेत् (पञ्चज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि च) तस्य आजीवनपर्यन्तं विजयो न भवति। अपि च नाशः तु अवश्यं सिद्ध्यति। एकाग्रबुद्ध्या एव विषयसिद्धिः भवति। इन्द्रियलालसाय मा गत्वा नियुक्तमनस्को भूत्वा विषयग्रहणं कर्त्तव्यम्।

**एकाग्रबुद्धिः इत्युक्ते?**

यथा गम्यमान मार्गमध्ये सर्पं दृष्ट्वा जडी भूत्वा दृश्यमानं सर्पं दूरगमनपर्यन्तं तदेकदृष्ट्या यथा पश्यन्ति वयं तथैव तदेकदृष्ट्या बुद्धया विषयग्रहणं पठनसमये श्रवण समये, अभ्यासनसमये, आवृत्तिसमये, प्रयोगसमये च स्थित्वा कर्त्तव्यम् अध्ययनम्।

श्रीमद्भगवद्गीतायां भगवता गीताचार्येण श्रीकृष्णपरमात्मना उपदिष्टमार्गेण इन्द्रियलालसां परित्यज्य नियमित मनस्को हरिणी भूत्वा अध्ययनं क्रियते चे



# जूबिलीहिल्स्, भाग्यनगरे
# तिरुमलतिरुपतिदेवस्थानेन नूतनतया निर्मिते
# श्रीवेङ्कटेश्वरस्वामिनः आलये २०१९ मार्च् ०१ तः १३ पर्यन्तं
# समाचरित विग्रहप्रतिष्ठा, कलशस्थापनम्,महाकुम्भाभिषेकदृश्यानि



क्षीराभिषेके श्रीवेङ्कटेश्वरस्वामी

श्रीदेवीभूदेवी समेतः
श्रीस्वामी
(उत्सवमूर्तयः)





चन्दनाभिषेके श्रीवेङ्कटेश्वरस्वामी



श्रीवेङ्कटेश्वरस्वामिनः आलयदृश्यम् - जूबिलीहिल्स्, भाग्यनगरम्



पूर्णाहुतिः



पवित्रजलैः ति.ति.दे. अर्चकबृन्दः, उन्नताधिकारिणश्च



गर्भालयशिखरस्य महासम्प्रोक्षणम्

tirumalatirupatidevasthānam logo: तिरुमलतिरुपतिदेवस्थानम्

# फिब्रवरि २५तः मार्च् ०६ पर्यन्तं
# तिरुपति कपिलतीर्थे
# कपिलेश्वरस्वामिने
# ति.ति.दे. निर्वहित
# वार्षिकब्रह्मोत्सव
# दृश्यमालिका



श्रीकपिलेश्वरस्वामिनः आलये ध्वजारोहणकार्यक्रमः



हंसवाहनोपरि श्रीकपिलेश्वरस्वामी



अधिकारनन्दिवाहनोपरि श्रीकपिलेश्वरस्वामी,
समक्षे कामधेनोः उपरि श्रीकामाक्षीदेवी



कल्पवृक्षवाहनोपरि श्रीकामाक्षीदेवी कपिलेश्वरस्वामिनौ



भूतवाहनोपरि श्रीकपिलेश्वरस्वामी, कामाक्षीदेवी



सूर्यप्रभावाहनोपरि कामाक्षी समेत श्रीकपिलेश्वरस्वामी

तिरुमलतिरुपतिदेवस्थानम्

# फिब्रवरि २४तः मार्च् ०४ पर्यन्तं श्रीनिवासमङ्गापुरे श्रीकल्याणवेङ्कटेश्वरस्वामिने ति.ति.दे. निर्वहित वार्षिकब्रह्मोत्सव दृश्यमालिका



श्रीकल्याणवेङ्कटेश्वरस्वामिनः आलये ध्वजारोहणम्



महाशेषवाहनोपरि श्रीदेवीभूदेवी सहितः श्रीकल्याणवेङ्कटेश्वरस्वामी



सिंहवाहनोपरि श्रीकल्याणवेङ्कटेश्वरस्वामी



हंसवाहनोपरि विद्यामाता इव श्रीकल्याणवेङ्कटेश्वरस्वामी



सूर्यप्रभावाहनोपरि प्रकाशमानः श्रीकल्याणवेङ्कटेश्वरस्वामी



कल्पवृक्षवाहनोपरि कामितार्थप्रदाता श्रीकल्याणवेङ्कटेश्वरस्वामी



तिरुमलतिरुपतिदेवस्थानम् - तिरुपतिः

# श्रीवेङ्कटेश्वरसर्वश्रेयट्रस्ट्

'मनुष्यसेवा एव माधवसेवा' इति लक्ष्यं स्वीकृत्य ति.ति.देवस्थानम् नानाविध सामाजिक - संक्षेमकार्यक्रमान् निर्वहन् अस्ति। अस्मिन् एव पथे अनाथबालेभ्यः प्रोत्साहनाय संकल्प्य १९४३ वर्षे श्रीवेङ्कटेश्वरबालमन्दिरम् (तिरुपतिः) ट्रस्ट् स्थापितम्। इदं श्रीवेङ्कटेश्वरबालमन्दिरं ट्रस्ट् प्रस्तुते श्रीवेङ्कटेश्वरजलनिधिपथकं, कल्याणमस्तुट्रस्ट्, श्रीवेङ्कटेश्वरसमाचार-सांकेतिक ट्रस्ट् च मिलित्वा 'श्रीवेङ्कटेश्वरसर्वश्रेयट्रस्ट्' रूपेण परिणमितम्।

## श्रीवेङ्कटेश्वरसर्वश्रेयट्रस्ट् लक्ष्याणि

०१) अनाथबालबालिकानां, वृद्धानां, निराश्रय-निर्धनानाम् कृते अभिवृद्धि-संरक्षण-संक्षेमपथे धर्मशालानां, वासगृहाणां व्यवस्थाकरणम्।
अनाथेभ्यः, आर्थिकदृष्ट्या पृष्टे स्थितेभ्यः विद्यार्थिभ्यः आर्थिकसहायप्रदानम्।

०२) दिव्याङ्गेभ्यः, मानसिकरुग्णेभ्यश्च वैद्य व्यवस्था। अस्मिन् लक्ष्ये कुल-मत-जाति-वर्ग-वर्णभेदान् अदृष्ट्वा सर्वान् समानतया स्वीकरणम्।

०३) अकाल-अतिवृष्ट्यादि प्रकृतिविपत्तिषु, अग्निप्रमादेषु च सत्वरसहायचर्याणां पालनम्।

०४) मूक- बधिरशिशुभ्यः, बालेभ्यश्च पुनरावास केन्द्राणां व्यवस्थीकरणम् ।

०५) ग्रामेषु उपर्युक्त लोपेभ्यः बालकेभ्यः उचित परिकराणां प्रदानम्, एवमेव तेभ्यः विद्याबोधन व्यवस्था।

०६) समाजे पेयजलव्यवस्था एवञ्च तिरुमल पञ्चायत्, तिरुपति कार्पोरेषन् कृते आवश्यक जलस्य प्रदानार्थं कूपानां व्यवस्थीकरणम्।



०७) श्रेयो रूपी विवाहकार्यक्रमेभ्यः वधू-वरौ गौरवाभिमानेभ्यः उन्नत कुटुम्बजीवनयापनार्थं व्यवस्थीकरणम्।

०८) भविष्यत् स्तरेभ्यः कृते पुस्तकेभ्यः साकं सद्गुणकरूपी आधुनिक-सांकेतिकसदुपायान् परिकल्प्य तेभ्यः अस्मदीय सांस्कृतिकवारसत्वसम्पदः प्रदानम्।

०९) सामाजिकक्रमशिक्षणां, नैतिकमूल्यान् वर्धयन् युवासु आत्मविश्वासस्थापनम्।

१०) उपरि वर्णितानां आशयानां कृते कृषि रतेभ्यः व्यक्तिभ्यः, संस्थाभ्यश्च सहकारप्रदानम्।

## श्रीवेङ्कटेश्वरसर्वश्रेयट्रस्ट् निमित्तं देयाः...

०१) अस्मिन् पथके सामान्यदेयः १०००/-

०२) १०००/- रूप्यकेभ्यः न्यूनमस्ति चेत् दातुः सकाशे अनुक्त्वा एव श्रीस्वामिनः दानपात्रे स्थाप्यते। देयान् सर्वान् अपि एकस्मिन्नेव राज्यवित्तकोषे स्थाप्यते। तत्र आगम्यमान वड्डी (व्याजं) अस्मिन् कार्ये उपयुज्यन्ते। दातारः स्वीयदेयं 'दि एग्जिक्यूटिव् आफिसर्, श्रीवेङ्कटेश्वरसर्वश्रेयट्रस्ट, ति.ति.दे. (तिरुपतिः)' वर्याय षेड्यूल् वित्तकोशात् स्वीकृतेन चेक्/डि.डि. माध्यमेन 'चीफ् अकौण्ट् आफिसर् ति.ति.दे. तिरुपतिः - ५१७५०१' वर्याय प्रेषयितु शक्नुवन्ति।

इतर विवराणां कृते - ०८७७ - २२६४२१८ कृते सम्पर्क कुर्वन्तु।



# श्रीपद्मावती श्रीनिवासयोः परिणयोत्सववैभवम्

(श्रीपद्मावती श्रीनिवासयोः परिणयोत्सवसन्दर्भे....)

तेलुगु मूलम्- श्रीमती एम्.पद्मावती वेङ्कटरमणः

संस्कृतानुवादः - डि.हरिकृष्णः

**प्रपञ्चप्रख्यातं तिरुमलक्षेत्रं नित्यकल्याणतया हरिततोरणमिव च भासते। अत्र स्थित स्वामिने प्रतिदिनं कल्याणं! प्रतिदिनं वैभोगश्चा! तस्य कल्याणस्य दर्शनेन बहु आनन्दः, आह्लादश्च अनुभूयेते। तस्मिन्नेव मार्गे स्वामिने कल्याणोत्सवः, परिणयोत्सवश्च कारयितुं नैके भक्ताः वाञ्छन्ति।**

स्वामिने एतादृशोत्सवाचरणेन स्व स्व जीवितान्यपि मङ्गलकराणि, शुभकराणि च भवन्तीति भक्तानां विश्वासः। एतादृशं कल्याणं शनैः शनैः ग्रामेषु, मण्डलेषु, पत्तनेषु, राज्येषु, अस्मिन् देशे एव न, अपि तु प्रपञ्चव्याप्तेषु विस्तृतम्। स्वामिनः कल्याणस्य प्रशस्तिः तावती वर्तते। एवं रूपीं विशिष्टतां सम्पादितस्य श्रीवेङ्कटेशस्य परिणयोत्सववैभवस्य विषयेऽपि ज्ञास्यामः।

**पद्मावती श्रीनिवासयोः परिणयमहोत्सवगाथा -** एकदा आकाशराजप्रभुः यज्ञार्थम् आरणीनदीभूमिं खनन समये एकं पद्मं दृष्टवान् । तस्मिन् पद्मे मनोहरी लघुबालिकां, तेन दृष्टा। तां दृष्ट्वा बहुसन्तोषं प्राप्य सः राजा पद्मेऽस्तीति कारणात् साक्षात् लक्ष्मीदेव्याः स्वरूपमिति मत्वा ''पद्मावती'' इति नामकरणं कृतवान्।

एकदा पद्मावती स्वप्रियसखीभिः वने विहरणशीला अस्ति। तस्मिन् समये स्वामी अश्वोपरि स्वमृगम् अन्विषमाणः तासां समीपे आगतः। मम मृगः इतः आगतः। भवत्यः दृष्टवत्यः वा? इति पृष्टवान्। तदा ताः- आर्य! अत्र पुरुषाणां प्रवेशः नास्तीति वारितवत्यः। तासां वचनानि श्रुत्वा पद्मावतीं पश्यन्, सा का? इति पृष्टवान्। तदा सा पद्मावती प्रथमं तव परिचयं दद! इति उक्तवती। तयोर्मध्ये एवं सम्भाषणं जातम्। तच्चेत्थम् -

**स्वामी -** अस्माकं यदुवंशः, पिता वसुदेवः, माता देवकी, मित्रं फल्गुनः, बान्धवाः पाण्डवाः। कृष्णपक्षे जननं मम। अतः मम नाम कृष्णः। मम वर्णं कृष्णवर्णम्। अयं मम कुलगोत्रादिकम्। हे भाम! तवकुलसमाचराः कथ्यताम्।



**पद्मावती -** हे आखेटक! अहम् आकाशराज्ञः कुमारी। मम नाम पद्मावती। अस्माकं चन्द्रवंशः। अत्रि गोत्रः। त्वम् इतः दूरं गच्छ! मम विषये विवराणि ज्ञातवान् खलु! इत त्वं गच्छ!

**स्वामी -** किमर्थं कठिनतया वदसि? सरलतया पुण्यमायाति। मया सह विवाहं करोतु। ममाभिलषां पूर्णीकुरु भाम!

**पद्मावती -** हे आखेटक! तव प्राणानामुपरि आशा नास्ति वा? मम पिता आकाशराजा! तव विनाशमपि कर्तुं शक्नोति। अतः इतः दूरं गच्छ।

**स्वामी -** तव पिता राजा मां कथं मारयति? त्वं तु कन्या, अहं वरः। राजदृष्टौ इदं न्यायमेव खलु!

**पद्मावती -** अहं का इति त्वं न जानासि। त्वां दृष्ट्वा झटिति आकाशराजा त्वां शिक्षयति। इदमेव अग्रे भविष्यति।

**स्वामी -** हे देवि! अहमवश्यं मरणोन्मुखः एव। किन्तु पूर्वकर्मफलस्य भोगः तु करणीयः एव। धर्मात्मा आकाशराजा मां कथं मारयति?

**पद्मावती -** हे निषाद! इत त्वां भगवानेव रक्षेत्! सुखेन गृहं गच्छ! मातापितरौ, बन्धुजनान्, सोदरान्, मित्रान् त्यक्त्वा किमर्थम् एकाकी इव सञ्चरसि?

**स्वामी -** ब्रह्मणा लिखितं व्यर्थं न भवति। जयापजयौ कथं वा भवतु नाम। तव सुखमेव प्रधानम् इति प्रोक्ते सति तं श्रुत्वा पद्मावती स्व सखीभिः स्वामिनः अश्वोपरि शिलाखण्डान् क्षेपयति। तं दृष्ट्वा श्रीनिवासः ततः प्रस्थानं करोति।

एवं रूपेण पद्मावती श्रीनिवासयोः कोपतापैः परिचयः प्रारम्भो भूत्वा वकुलामातुः दौत्येन, भविष्यवक्ता रूपेण श्रीनिवासस्य सन्देशेन च प्रणयस्य प्रारम्भो भूत्वा परिणयार्थं मार्गरूपेण परिवर्तितः। अस्य परिणोत्सवस्य कृते ब्रह्मादिदेवाः सर्वेऽपि आगतवन्तः। एतत्सर्वमपि वेङ्कटाचलागमनाय स्वामिना कल्पितः घट्टः एव।

परिणयानन्तरमेव स्वामी वेङ्कटाद्रौ स्थितः। अत्र परिणयार्थं प्रधान पात्रं स्वामिनः 'भविष्यवक्ता' रूपी वेषः एव। तस्मिन् पात्रे धर्मसूक्ष्माः बहवः सन्ति। तेषां ज्ञानेनैव परिणयोत्सवस्य अर्थः, परमार्थश्च।

**'भविष्यवक्ता' पात्रे श्रीनिवासः -** कुत्र भगवान्? कुतो वा भविष्यवक्ता वेषः? ज्येष्ठाः एनान् कार्यान् कर्तुम् अवमानतया भावयन्ति। किन्तु कार्यसाधनार्थम् एषामाचरणं न दोषः इति स्वामिनः सूचना। परिपूर्णस्य कृते कोऽपि भेदभावः, अवमानो वा न भवतः। तदपि कार्यार्थिः भूत्वा भगवतः विधानं भविष्यत्पुराणे एवं प्रोक्तम्।

**'भविष्यवक्ता' पात्रवर्णनम् -** स्वामिना धृतं वृद्धभविष्यवक्ता वेषं कथमस्तीत्युक्ते - छिन्नशाटिकया, गिरिविन्दमालाभिः, ब्रह्माण्डमेव वंशस्यूततया कृत्वा शिरोपरि धृतवान्। ब्रह्मदेवं शिशुरूपेण स्वीय शाटिकाञ्चले धृतवान्। रुद्रं हस्तदण्डरूपेण कृत्वा नारायणपुरवीथिषु प्रविष्टः। ब्रह्माण्डमेव भगवान् स्वेच्छया परिणतिं करोति। शिशुः भवत्वित्युक्ते भवनमेव, दण्डो भवत्वित्युक्ते परिवर्तनमेव कर्तव्यम्। ब्रह्मरुद्रौ तथा नयनं स्व सर्वोत्तमत्व प्रदर्शनमेव। शिशुः ब्रह्मदेवस्यावतारः नास्ति।





भूलोके ब्रह्मदेवस्य अवताराः न सन्ति। तस्मिन् सन्दर्भे भगवदाज्ञया किञ्चित्कालं शिशुरूपेण परिवर्तितः।

**'भविष्यवक्तृत्वं' सत्यनिष्ठा -** भविष्यवक्ता नारायणपुरवीथिषु भ्रममाणा सती भविष्यं वदामि! भविष्यं! यदस्ति तदेव वच्मि! यन्नास्ति तदपिवच्मि इति उच्चैः वदन् अग्रे गच्छति। तथा तां धरणीदेव्याः परिचारकाः दृष्टवत्यः। धरणीदेव्यै प्रोक्ते सति ताम् आह्वातुम् आदिष्टवती। ताभिः परिचारिकाभिः आहूते प्रथमं तु सा भविष्यवक्ता नागता। गौरवायोक्त्वा अन्ते प्रविष्टा।

सर्वप्रथमं धरणीदेवीं स्नानं कृत्वा शुचितया आगच्छत्विति उक्तवती। भविष्यकथनारम्भे तारतम्यानुसारं देवतास्मरणं कृत्वा, सकलक्षेत्राणां स्मरणं कृत्वा, ब्रह्मादिदेवान् स्मृत्वा सत्यमेव वच्मीति उक्तवती।

तथा किमर्थं कृतम्? पाण्डित्यं भवतु, प्रतिभया युक्ता भवतु किन्तु भगवदनुग्रहेण विना तत्सर्वमपि वृथा इति वक्तुमेव स्वयं भगवान् चेदपि अन्यदेवानां स्मरणपूर्वकं एवं कृतवती।

**तिरुमलायां भूयमानः पद्मावती श्रीनिवासयोः परिणयोत्सवः -** पद्मावती श्रीनिवासयोः परिणयकार्यस्य प्रतीकतया अखिलाण्डकोटि ब्रह्माण्डनायकस्य, आद्यन्तरहितस्य,



**पद्मावती श्रीनिवासयोः परिणयकार्यस्य प्रतीकतया अखिलाण्डकोटि ब्रह्माण्डनायकस्य, आद्यन्तरहितस्य, अनादिनिधनस्य श्रीनिवासस्य श्रीदेवी भूदेव्यैः साकं वैशाखशुक्लदशम्यायाः पूर्वं परं च दिनत्रयं यावत् नारायणोद्यानवने अधिकारानधिकार, भक्तजनसमक्षे इयं परिणयोत्सवसेवा अत्यन्तवैभवेन आचर्यते।**

अनादिनिधनस्य श्रीनिवासस्य श्रीदेवी भूदेव्यैः साकं वैशाखशुक्लदशम्यायाः पूर्वं परं च दिनत्रयं यावत् नारायणोद्यानवने अधिकारानधिकार, भक्तजनसमक्षे इयं परिणयोत्सवसेवा अत्यन्तवैभवेन आचर्यते। स तिरुमलगिरेः सायं समयः। प्रदेशेऽस्मिन् एकत्र भक्तजनसन्दोहः, एकत्र विवाहज्येष्ठाः, अन्यत्र अधिकारिवर्गः। डक्काडमरुकादि वाद्यिद्यानां श्राव्यध्वनिना सह भक्तसन्दोहः वीक्षमाणे श्रीस्वामी गजवाहने छत्रचामरादिभिः ध्वजपताकराजोपचारैः वाहनमण्डपात् महद्वारगोपुरपर्यन्तम् आगत्य तत्र आलयप्रकारप्राङ्गणात् आन्दोलिकायामागत्य श्रीदेवीभूदेवीः अवेक्षणं कृत्वा नूतनवररूपेण नारायणोद्यानवने प्रविशति। एवमेव द्वितीयदिने अश्ववाहने, तृतीयदिने गरुडवाहने आयाति।

**परिणयोत्सवक्रियाविधिः -** उभयत्र सम्मुखे विद्यमान श्रीभूदेवीः मलयप्पेभ्यः अर्चकाः सर्वप्रथमं त्रिवारं पुष्पमालासमर्पणं कारयन्ति। इदं वराहपुराणविधानम्। श्रीस्वामी मल्लिमालां स्वीयकण्ठात् निष्कास्य पद्मावत्याः कण्ठे धारयति। तामेव मालां पद्मावती श्रीस्वामिने ददाति। एवं विधानेन त्रिवारमेवं कुरुतः। अस्यैव प्रतीकतया अत्र पुष्पमालासमर्पणं क्रियते। तदनन्तरं वेदमन्त्रोच्चारणानां मध्ये नूतनवधूवरयोः मधुपर्क (वस्त्र) समर्पणं भवति। अनेन पद्मावत्याः परिणयक्रमः समाप्तिर्भवति।

श्रीभूदेव्यौ अलङ्कृते श्रीनिवासस्य पार्श्वे आगत्य विशेषार्घ्य पाद्याचमनधूपदीपनैवेद्यान्, उपचारान् गृहीत्वा आचार्यैः ऋक्यजुस्सामाथर्वान् श्रुत्वा, सङ्गीत-नृत्यादीन् अवलोक्य, भक्तजनान् अनुगृहीत्वा, यथाविधि प्रदक्षिणाक्रमेण आलयं प्राप्नुवन्ति।

अस्य परिणयोत्सवफलं कोटिकन्या - महादानफलसमानम्। परिणयोत्सवं यः कारयति सः वेङ्कटेशानुग्रहं प्राप्नोति। भक्तेभ्यः कामधेनुः भूत्वा सर्वसौभाग्यान् अनुगृह्णाति।



# नृसिंहावतारवैभवम्

- श्री विष्णुवर्धनः

**दयाकारुण्यरूपाय,**
**प्रह्लादवरदाय च।**
**नीलगिरिनिवासाय,**
**श्री नृसिंहाय मङ्गलम्॥**

स्व प्रतिज्ञां पालयितुं स्वकीयमौपनिषधं वेषं विधाय, परमकारुणिको भगवान् बहुधा विशेषण अवतार। प्रधानतया श्रीमहाविष्णोवरवतारेषु दशावताराः अत्यन्तप्रधानभूता इति सर्वैर्ज्ञायते एव। श्रूयते च ''अजायमानो बहुधा विजायते'' इति।

नन्वयं सन्देहः? श्रुत्युक्तरीत्या यदि परमात्मना बहुधा विजायते! तर्हि तस्य अजायमानत्वं कथमिति। प्राज्ञैः एवमुपदिष्टम् - तत्र ''अजायमानत्वं'' नाम कर्ममूलकजन्म -रहितत्वमिति, ''बहुधा विजायते'' इत्यनेन कृपामूलकजननमिति च। अत एव गीयते श्रुतिस्मृति पुराणादिषु -

- '' स उ श्रेयान् भवति जायमानः'' - (ऋग्वेदः)
- '' इच्छागृहीताभिमतोरुदेहः'' (वि.पु.)

एवञ्च सर्वज्ञत्व-कृपालुत्व- सकलजगत्कारणत्व - नित्यत्व-निर्मलत्व-निरवधिकसौन्दर्यत्वादि सकलकल्याणाकारः, अखिलहेयप्रत्यनीको भगवान् स्वकथाश्रवण-मनन-दर्शन - पूजनाद्यैरपरिमितानन्दयुक्तैः स्वभक्तैस्संप्रार्थितस्सन्, मत्स्य-कूर्म-वराह-नारसिंह-वामन-परशुराम-राघव-बलभद्र-कृष्ण-कल्क्यादि दशावतारैः 'इच्छागृहीताभिमतोरुदेहः' इति स्व इच्छानुसारं परिगृहीतदेहेन दशधा भूमिकां निर्वर्तयन् लोकरक्षां करोति। एतेषु अवतारेषु कः अवतारः अत्यन्तोत्तमः? कः परमानन्ददायकः? कः संसेवनीयः? इत्यदीनां विचारे सर्वेऽवताराः मधुरतरा एव भवन्ति।

यथा च -

**इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।**
**तथाऽपि न तदाख्यातुं सरवत्यापि शक्यते॥** इति

- इक्षुक्षीरादीनां मधुरपदार्थानां माधुर्ये स्वरूपे च भेदे सत्यपि, तं भेदमाख्यातुं सरस्वत्या अपि न शक्यत इति यथा उक्तं तद्वत् भक्तकारुण्यरूपाणां दशावताराणां वैशिष्ठ्ये, तत्तद्धरिवस्याजनितपरमानन्दे च विभिन्नत्वं वा उत्कृष्टतरत्वं वा वक्तुं केनाऽपि न शक्यते।

**श्री नृसिंहावतारवैभवम् -** सर्वैरस्माभिर्ज्ञायते एव वरगर्विणं दैत्यराजं हिरण्यकशिपुं हन्तुं स्वभक्ताग्रेसरस्य प्रह्लादस्य रक्षणव्याजेन सकलजगद्रक्षणं च विधातुं भगवान् नारसिंहः अवततारेति। अत्रापि -

**नारायणस्तु सिंहत्वे मुखं कृत्वा च दारुणम्।**
**नररूपं न पुः कृत्वा मानुषत्वे व्यवस्थितः॥** इति

नरत्व-सिंहत्व युक्त स्वरूपावताराधारणे इदं वैशिष्ठ्यं ज्ञायते

**हिरण्यकशिपु स्वरूपः -**

**देवैर्वा मानुषैर्वापि मृगैर्जीवैरजीवकैः।**
**दिवा रात्रौ तथा चैव वधो नैवं ममेति च॥** इति

शक्तिसम्पन्नैर्देवैर्वा, अशक्तैर्मानवैर्वा, मृगैर्वा सकलजीवैः अचेतनैर्वा, दिवा वा, रात्रौ वा हिरण्यकशिपोः वधः न भवितव्यमिति वरं प्राप्य तेन वरगर्वेण युक्तं दैत्यपतिं हन्तुं भगवान् एवम् अकरोत्-

**वधं कर्तुं कृतोद्योगश्चिन्तयित्वा हरिः प्रभुः।**
**नरसिंहवपुः कृत्वा दिवारात्रम् व्यपोह्य च॥**
**सन्ध्यायात्तु वधं कुर्यात् स्वीयाङ्के तु नखाङ्कुरैः।**
**बाह्यमन्तं हित्वा जीवाजीवैः नखैश्शुभैः॥**

विशिष्य अस्मिन् नृसिंहावतारे परमात्मना अपरिमित भक्तवात्सल्यं अनुपसमरौद्रञ्च प्रदर्शितम्। सामान्यतः रौद्ररस्य क्रोधः स्थायिभावो भवति। किन्तु नृसिंहावतारे प्रदर्शितं रौद्रस्वभावस्याभिव्यञ्जकं भवति परमात्मनः भक्तवात्सल्यम्। स नारसिंहप्रभुः नैकेषु दिव्यक्षेत्रेषु अर्चावतार रूपेण अवतीर्य इदानीमपि स्वभक्तरक्षणत्वं प्रदर्शयति।








# सिद्धेः किं मूल्यम्?

**स्वा**मी रामतीर्थः लाहौरस्य त्यागस्य अनन्तरम् आधिक्येन हिमालयस्य कन्दरेषु एव समयं यापितवान्। सः प्रबलः साधकः आसीत्। कदाचित् गङ्गातटे अटनसमये कश्चन सिद्धयोगी तेन दृष्टः। सः जिज्ञासावशात् तं पृष्टवान् - ''योगिराज! कतिभ्यः वर्षेभ्यः भवान् तपश्चरणं कुर्वन् अस्ति?''

योगी उक्तवान् - ''प्रायः आ चत्वारिंशतः वर्षेभ्यः।''

स्वामिनः रामतीर्थस्य जिज्ञासा इतोऽपि प्रवृद्धा। सः ज्ञातुम् इष्टवान् यद् एतेषु वर्षेषु योगी कति सिद्धीः प्राप्तवान् स्यात् इति। अतः सः पृष्टवान् - ''योगिमहाराज! कां कां सिद्धिं प्राप्तवान् भवान् एतावता?''

योगी उक्तवान् - ''एतां गङ्गां पश्यति ननु भवान्।?''

''ओम्'' इति स्वामी रामतीर्थः उक्तवान्।

योगी उक्तवान् - ''अहम् इच्छामि चेत् एतस्मिन् जले तथा गन्तुं शक्नोमि यथा भवान् समतलभूमौ चलेत्।''

रामतीर्थः योगिनः योग्यताम् अवगतवान्। जिज्ञासां विस्मृत्य सः उक्तवान् यः गन्तुं शक्नुयात् सः आगन्तुमपि शक्नुयात् एव ननु?'' रामतीर्थः पृष्टवान् - ''इतोऽप्यधिकं किमपि सम्पादितं वा भवता?'' योगी कुपितः सन् प्रत्युक्तवान् - ''भवान् किम् एतां सिद्धिं लघुं भावयति?'' स्वामी रामतीर्थः हसन् उक्तवान् यः गन्तुं शक्नुयात् सः आगन्तुमपि शक्नुयात् एव ननु?'' रामतीर्थः पृष्टवान्- '' इतोऽप्यधिकं किमपि सम्पादितं वा भवता?'' योगी कुपितः सन् प्रत्युक्तवान् - ''भवान् किम् एतां सिद्धिं लघुं भावयति?'' स्वामी रामतीर्थः हसन् उक्तवान् - ''साधुवर्य! भवान् केवलं पारमेव गन्तुं शक्नोति; उत आगन्तुम् अपि शक्नोति?'' योगी उक्तवान् - ''योगिमहाराज! एतत् लघु एव न, लघुतरं लघुतमं वा मन्यताम्। भवान् स्वीयस्य जीवनस्य अमूल्यानि चत्वारिंशद् वर्षाणि व्यर्थं यापितवान्। भवान् चत्वारिंशति वर्षेषु यां सिद्धिं प्राप्तवान् तस्याः मूल्यं तु केवलं द्विनाणकमितम्। नदीपारं प्रति गमनाय नाविकः एकं नाणकं, प्रत्यागमनाय एकं नाणकं च स्वीकरोति।''

क्षणं विरम्य सः पुनः उक्तवान् - ''योगमिहाराज! भवान् अमृतसागरे निमज्ञनं तु कृतवान्, परं ततः मणेः रत्नस्य वा आनयनं विस्मृत्य पाषाणखण्डम् आनीतवान्। तादृशाः पाषाणखण्डाः सामान्यभूमौ अपि उपलब्धाः भवेयुः एव।''

भौतिकी सिद्धिः शक्तेः अपव्ययाय। आत्मा परिचीयताम्।

*- स्वामी रामतीर्थः*



# दक्षयज्ञविध्वंसः

तेलुगु मूलम् - डा।। वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - श्री चिर्रावूरि श्रीरामशर्मा (अविनाशः)

क्रुद्धः सुदष्टोष्ठपुटः सधूर्जटिः
जटां तडिद्वह्निसतोग्ररोचिषम्।
उत्कृत्य रुद्रः सहसोत्थितो हसन्
गम्भीरनादो विससर्ज तां भुवि।।

विश्वस्मिन् सर्वेष्वपराधेषु अत्यन्तभयङ्करोऽपराधः वैष्णवापराधः। तस्मात् वैष्णवापराधात् यः कोऽपि अपसर्तुं न समर्थः। तर्ह वैष्णवः को वा इति प्रश्ने सति यः विष्णुभक्तो भवति स एव वैष्णवः। श्रीमद्भागवते ईश्वरः महान् विष्णुभक्त इति च कीर्तितः। तादृशं महावैष्णवं यः निंदां करोति तस्य परिस्थितेः रूपं कथं भविष्यतीति विज्ञापितुं दक्षयज्ञविध्वंसोपाख्यानं वर्तते। इदम् उपाख्यानम् भागवते चतुर्थस्कन्धे वर्तते।

स्वायंभुवमनोः आकूतिः, देवहूतिः, प्रसूतिः इति त्रयः कन्याः, प्रियव्रतः, उत्तानपाद इति द्वौ पुत्रौ च आसन्। मनुः स्वपुत्रीं प्रसूतिं ब्रह्मतनयाय दक्षाय दत्वा विवाहम् अकरोत्। तयोः अपत्यमेव सतीदेवी। सा भवनाशकस्य शिवस्य पत्नी बभूव। सा स्वपतिं परमप्रेम्णा सेवयति स्म।

एकदा प्रजापतयः बृहद् क्रतुं निर्वहन्ति स्म। तं यज्ञं द्रष्टुं महर्षयः, मुनयः, देवताः सर्वेऽपि समागमन्। तस्यां सभायां ब्रह्मा, शिवोऽपि उपविष्टौ। तथा स्वेषु स्वेषु आसनेषु सुखासीनाः सर्वेऽपि ततः आगतं दक्षप्रजापतिं दृष्ट्वा तस्य वपुः कान्त्या आश्चर्यचकिताः सन्तः गौरवार्थम् उदतिष्ठन्। सभापतिः ब्रह्माऽपि दक्षं समुचितरीत्या निमन्त्रयामास। सर्वेऽपि स्वस्मिन् गौरवं प्रदत्वा उत्थिताः; किन्तु स्वजामाता शिवः आसने एव उपविष्टो भूत्वा गौरवं न प्रदत्तवान् इति दक्षः क्रोधपूरितः सन् ईश्वरं शिवमुद्दिश्य - अयं शिवः अमर्यादः। सभावर्तने अज्ञानी। साधुवेषं धृत्वा मत्पुत्रीं विवाहमकरोत्। मत्पितुः ब्रह्मणः वचनादेव शिवाय स्वपुत्रीम् अदासिषम्, किन्तु मदिच्छा नास्ति। इतः प्रभृति एतस्मै यज्ञहविर्भागः न लभ्यताम् इति शपामि'' इति दूषयित्वा तां सभां त्यक्तः।

शिवं दक्षः शप्तवानिति श्रुत्वा नन्दीश्वरः क्रोधोद्रिक्तः सन् देहभावे एव स्थितः दक्षः शीघ्रं अजाशिरो भविष्यति; इमे ब्राह्मणाः सर्वेऽपि उदरपोषणायैव तपोव्रतादीन् कृत्वा भक्ष्याऽभक्ष्यविचक्षणरहिताः भूयात्! ते सर्वे भैक्ष्यजीवनं याप्नुयुः इति शशापातं श्रुत्वा भृगुमहर्षिः शिवभक्तान् उद्दिश्य "शिवव्रतपरायणाः पाषण्डाः भूयासुः शिवार्चकाः जटामण्डल धारिणः सन्तः मदिरमांसभक्षकाः भवेयुरिति च'' शप्तवान्। इत्थं शापप्रतिशापान् श्रुत्वाऽपि शिवः तूष्णीभावेन सभातः निरागमत्।

एकदा दक्षप्रजापतिः महायज्ञं संकल्प्य शिवं विना सर्वान् निमन्त्रयामास। दक्षयज्ञं द्रष्टुं विमाने गच्छन्तः

देवीदेवाताः दृष्ट्वा सती अपि द्रष्टुकामा सती शिवं प्रार्थितवती। परन्तु शिवः निमन्त्रणं विना पितुर्गृहमपि न गन्तव्यमिति मा गच्छ इति च अभणत्। तथाऽपि सती शठं धृत्वा यज्ञार्थम् अगमत्। शिवः प्रमथगणान् नन्दीश्वरं च तया सह प्रापयामास। यज्ञस्थले स्वमाता, भगिन्यः, पिता सर्वेऽपि च तया सह न दृष्टवन्तः संभाषणं न कृतवन्तः यज्ञहविर्भोगोऽपि शिवाय न निवेदित इति सती अपश्यत्। भर्तुरगौरवं असोढमाना सती शिवदूषणपरात् दक्षात् प्राप्तशरीरं योगाग्नौ दग्धमकरोत्। शिवगणाः भूनामकदैवतै पालयितवन्तः। शिवः स्वजटाजूटात् एकं केशं उत्पाट्य भूमौ अक्षिपत्। तस्मात् महाभयंकरः वीरभद्रः आविर्भूय शिवाज्ञया यज्ञस्थलीं संप्राप्य यज्ञ विध्वंसमकरोत्। यज्ञवाटिकंया हवनकुण्डान्। अग्निरहितान् अपभ्रष्टान् मण्डपान्, यज्ञपात्राणि भ्रष्टानि च अकरोत् वीरभद्रः। स वीरभद्रः भृगोः स्मश्रूणि, भगनेत्रं,



शिवः स्वजटाजूटात् एकं केशं उत्पाट्य भूमौ अक्षिपत्। तस्मात् महाभयंकरः वीरभद्रः आविर्भूय शिवाज्ञया यज्ञस्थलीं संप्राप्य यज्ञ विध्वंसमकरोत्। यज्ञवाटिकंया हवनकुण्डान्। अग्निरहितान् अपभ्रष्टान् मण्डपान्, यज्ञपात्राणि भ्रष्टानि च अकरोत् वीरभद्रः। स वीरभद्रः भृगोः स्मश्रूणि, भगनेत्रं, पूषदंतान् उत्पाट्य पट्टिशं करेणादाय दक्षस्य शिरः जुहाव। शिवगणाः सर्वेऽपि यज्ञस्थलीं अग्नौ दग्ध्वा निवृत्ताः।

पूषदंतान् उत्पाट्य पट्टिशं करेणादाय दक्षस्य शिरः जुहाव। शिवगणाः सर्वेऽपि यज्ञस्थलीं अग्नौ दग्ध्वा निवृत्ताः।

तदा रुद्रगणैः पीड्यमानाः ऋत्विजः, सभासदः देवताः सर्वेऽपि ब्रह्माणं शरणं व्रजुः। ब्रह्मा तैः सह कैलासं गत्वा शिवमुद्दिश्य अपरिपूर्णं दक्षयज्ञं समाप्य यज्ञभागं संगृह्य शिवगणैः बाधितान् सुरान्, ऋत्विजोऽपि स्वस्थतां करोत्विति प्रार्थितवान्। तं श्रुत्वा ईश्वरः अविवेकिनः गुणं पाठयितुं मया इत्थं कृतमिति, दक्षशिरः यज्ञाग्नौ भस्मीकृत कारणात् मेषशिरसा एव स जीवेदिति सर्वेषामपि क्षिप्रमेव स्वास्थ्यं प्राप्नुत इति च समश्वासयत्। अनन्तरं सर्वेऽपि यज्ञवाटिकाम् आगत्य शिवाज्ञया मेषशिरसा दक्षशरीरं योजयित्वा दक्षं स्वपुत्र्याः सत्याः देहत्यागं स्मृत्वा शिवापराधादेव इत्थं दैन्यं प्राप्तमिति विज्ञाय ईश्वरं प्रार्थयामास। करुणार्द्रहृदयः शिवः तम् अन्वग्रहीत्। पुरोहिताः यज्ञस्थलं पवित्रीकृत्य क्रतुसमाप्तिम् अकुर्वन्। यज्ञकुण्डात् श्रीमन्नारायणः विविधायुधयुत अष्टबाहुसहितो विष्णुः प्रत्यक्षीकृतः। तस्मै देवाय सर्वेऽपि दण्डप्रणामान् अकुर्वन्। दक्षः ब्रह्मरुद्रौ पृथक् पृथक् संपूज्य यज्ञभागम् अयच्छत्। सुराः सर्वे दक्षप्रजापतिम् आशिषः अकुर्वन्।

अतः एतस्मात् वृत्तान्तात् शिवविष्णोरभेदेनैव परमपदं प्राप्नुमः। अहंकाररहिते भक्ते एव भगवान् अनुगृह्णाति इति च ज्ञायते।



# व्याधिषु ब्रह्मास्त्रः अपामार्गः

तेलुगु मूलम्- डा।।चिट्टिभोट्ल मधुसूदनशर्मा
संस्कृतानुवादः - कु.दुर्गा

पञ्चमवेदेत्युच्यमाने आयुर्वेदे अपामार्गं किणिहि इति, क्षारमध्या इति एवञ्च प्रत्यक्पुष्पा इति नामभिः व्यवहारः वर्तते।

अपामार्गः सम्पूर्णे देशे निरन्तरं सुलभतया लभ्यमान ओषधिः अस्ति। प्रायः '२' मीटर् प्रमाणोन्नतमेनं शास्त्रीयतया 'अभिवान्यस् आस्पर' इति व्यवहरन्ति। अमरान्येसि इत्युच्यमानस्य वृक्षजातेः सम्बन्धितस्य अस्य काण्डाः गोलाकारे, सामान्यपत्राणि अभिमुखपत्रविन्यासे भवन्ति। लम्बकङ्कैः, जीरकसदृशबीजैः अयं युक्तो भवति।

आङ्गलभाषायां chaff tree इति वदन्ति। अस्मिन् वृक्षे सर्वाङ्गेषु अद्भुतान् औषधगुणान् भगवान् निक्षिप्तं कृत्वा मनुष्येभ्यः प्रसादितवान्।

दैनन्दिनजीवने नानाविधानारोग्यसमस्यासु एनम् अपामार्गोषधं कथमुपयुज्मः इति ज्ञास्यामः।

## वृश्चिकदंशने -

पत्रान् अवहननं कृत्वा रसं निष्कास्य उपर्यावर्तनरूपेण लेपनं कृत्वा, तमेवौषधं ५-१०-मि.ली. प्रमाणेन सेवनेन वृश्चिक-मधुमक्षिकादिभिः दंशनस्थाने पीडादिकं न्यूनीभवन्ति।

## दन्तव्याधिषु -

१०० ग्रा. अपामार्ग बीजानां चूर्णं, १०ग्रा. भाष्पितं स्फटिकं (आयुर्वेदविक्रयशालासु शुभ्रभस्म इति नाम्ना प्राप्यते) १०ग्रा. लवणं, १-२ पाककर्पूरञ्च पेषणं कृत्वा तं द्रव्यं कूप्यां स्थाप्य दन्तधावनचूर्णतया प्रयुज्मश्चेत् दन्तपीडाः, रक्त स्रावणादिकञ्च न्यूनीभूत्वा दन्ताः दृढत्वं प्राप्नुवन्ति।

## खास-आयासानां कृते -

अपामार्गं समूलतया स्वीकृत्या शुष्कं कृत्वा, भस्मं कृत्वा, संशोध्य एकस्यां कूप्यां संस्थाप्य प्रतिदिनं द्विवारं १ग्रा. भस्मं मधुना सह मेलयित्वा सेवनेन खास निर्वारणेन साकं श्लेष्मायाः सुलभतया बहिर्निर्गमनमपि भवति।

## चर्मव्याधिषु -

अपामार्गभस्मं किञ्चित् प्रमाणेन सर्षपतैलेन साकं मेलयित्वा उपर्यावर्तनरूपेण उपयुज्मः चेत् कण्डूयनादि चर्मसमस्याः न्यूनीभवन्ति।

एवमेव अपामार्गमूलचूर्णं, कृष्णमरीचिकाचूर्णं च समानभागे मेलयित्वा, स्थाप्य प्रतिदिनं द्विवारं एक ग्रा. चूर्णं मधुना सह अथवा जलेन सह सेवनेन सोरियासिस् प्रभृतिषु चर्मसमस्यासु उपयोगः भवति।

शुष्कापामार्गस्य समूलचूर्णं, बीजानि च आसंवत्सरम् आयुर्वेदौषधविक्रयशालासु लभ्यमानाः भवन्ति।

## स्त्रीणां गर्भाशय समस्यासु -

समूल अपामार्ग चूर्णं, मिश्रीचूर्णञ्च एकैकं ५० ग्रा. मेलयित्वा प्रातः, सायं एकैकस्मिन् समये '२' ग्रा. चूर्णं '१००' मि.ली. जले सम्मेल्य सेवनेन स्त्रीषु भूयमानः अधिकबहिस्रावः न्यूनीभवति। गर्भाशयशुद्धिः भूत्वा मासिकं क्रमेण आयाति। अपि च एनमौषधम् उपर्युक्त प्रकारेण विनियोगेन मुख-नासिका-मल-मूत्रद्वारेभ्यः अपि भूयमानः रक्तस्रावः न्यूनीभवति।



Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

तिरुमलतिरुपतिदेवस्थानम्

# नारायणवनम्
# श्रीकल्याणवेङ्कटेश्वरस्वामिनः
# ब्रह्मोत्सवः

१६-०५-२०११ तः २४-०५-२०११ पर्यन्तम्

**१६-०५-२०११ गुरुवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**१७-०५-२०११ शुक्रवासरः**
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**१८-०५-२०११ शनिवासरः**
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

**१९-०५-२०११ भानुवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

**२०-०५-२०११ सोमवासरः**
प्रातः - आन्दोलिकायां मोहिन्यवतारोत्सवः
रात्रौ - गरुडवाहनम्

**२१-०५-२०११ मङ्गलवासरः**
प्रातः - हनुमद्वाहनम्
सायं - वसन्तोत्सवः
रात्रौ - गजवाहनम्

**२२-०५-२०११ बुधवासरः**
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्

**२३-०५-२०११ गुरुवासरः**
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**२४-०५-२०११ शुक्रवासरः**
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्



